॥ श्रीः ॥

# बलिविजयनाटकम्

श्री यदुशैलवासि बालधन्वि
जग्गूवकुलभूषणकवि
विरचितम्

मैसूरु
राजकीय शाखामुद्रालये सम्मुद्रितम्
१९४९

॥ श्रीः ॥

॥ शुभमस्तु ॥

॥ श्रीमते हयग्रीवाय नमः ॥

# बलिविजयनाटकम्

---

## प्रथमोऽङ्कः

(नान्द्यन्ते ततः प्रविशति सूत्रधारः)

सूत्रधारः—अजोऽपि देहीत्यवदच्छ्रिताश्रयो
यो वामनो दानवमानसूदनः ।
अनन्तकल्याणगुणाकरो हरिः
स पातु वस्सान्द्रपयोदमेचकः ॥ १ ॥

(परिक्रम्य) एवमार्यमिश्रान्विज्ञापयामि—

नानानाटकनिर्माता यः कोविदमुदावहः ।
स एवास्यापि कर्ता हि जग्गूवकुलभूषणः ॥ २ ॥

अये ! किमिदं मयि विज्ञापनैकताने शब्द इव श्रूयते । पश्यामि तावत् ।

(नेपथ्ये)

किं वा स्थिरं जगति हन्त शरीरभाजां
वाताहताभ्रसदृशं किल वस्तुजातम् ।
एतादृशे सुखधियैव दुरन्तभोग्ये
द्रव्ये जनाः कृतधियोऽनुभवन्ति दुःखम् ॥ ३ ॥

अत्र साक्षी प्रक्षीणलक्ष्मीकस्सहस्राक्ष एव ।

सूत्रधारः—भवतु विज्ञातम्—

बलिना दानवेनाजौ हृतत्रैलोक्यसम्पदम् ।
समाश्वासयितुं शक्रं वनं विशति वामनः ॥ ४ ॥

(इति निष्क्रान्तः)

## स्थापना

(ततः प्रविशति वामनः)

वामनः—(किं वा स्थिरमिति पूर्वोक्तमेव पठित्वा) हन्त! त्रिलोकाधीश्वरेण सुरनायकेनापि न तावद्दूरीकृता ममता । अथवा श्लाघनीयो विलक्षणविषयमहिमा—

वाचा वर्णयितुं विचिन्तयितुमप्यत्यन्तदूरे स्थितं
भोग्यं स्वानुभवैकवेद्यमनवद्याह्लादहृद्यात्मकम् ।
सर्वापेक्षितमप्यनन्यसुलभं पुण्यैकलभ्यं शुभं
को वा स्वर्गमधीनमुज्झितुमहो वैराग्यतः कांक्षति॥५॥

(नेपथ्याभिमुखमवलोक्य) हन्त—

जटी चीरवृतक्षामप्रतीको ध्यानमन्थरः ।
प्रसूनाहरणव्यग्रो जिष्णुरभ्येति तापसः ॥ ६ ॥

भवतु । वृक्षान्तर्हितस्तावदस्य प्रवृत्तिमुपलप्स्ये । (इति तथा करोति)

(ततः प्रविशतीन्द्रः)

इन्द्रः—(ध्यानमन्दं परिक्रम्य) कः कोऽत्र भोः? (परितो विलोक्य) अये, न कोऽपि मदाज्ञानुयायी । भवतु अस्मत्प्रतीपं चूर्णयामि जगत्त्रयं वज्रेण । (इति बाहुयुगलं प्रसार्य विलोक्य च) हन्त, रिक्तहस्तोऽस्मि। (सोन्मादं)। कुमार, भो षडानन, किमद्यापि नायासि? न ते कर्णपथं प्रविष्टोऽयं रावः? धिक् त्वां द्वादश-

श्रवसम् । भवतु, पुत्रमाज्ञापयामि । तात, जयन्त, जय तं दृप्तं दानवाधमम् । सत्वरमायाहि । भवन्तमभिषिञ्चामि सुर-चमूपतित्वे । (स्तम्भीभूय सर्वतोऽक्षि विक्षिप्य) किमिदम् ? पुत्रोऽपि न मामाभाषते । धिक्पुत्रम् । अयि पुलोमजे, किमु त्वमपि विलोमतामवलम्बसे, मा कुरु तावदेवं प्रियतमे मयि निर्वर्तय मदभ्यर्थनां, अस्मत्प्रतीपं जयन्तमेनं निष्कासय प्रासादात् । हन्त ! किमिदं न कोऽपि मामनुयाति ? (सावेगं) धिगनधिकारिताम् । असंस्तुतजलावगाहो बलान्मज्जितोन्मज्जित इव संवृत्तोऽस्मि । (सखेदं)

नष्टराज्याधिकारस्य प्रजादूरीकृतस्य च ।
जीवितान्मरणं श्रेयो धिङ्मां जीवन्तमद्य हा ॥ ७ ॥

(इत्युन्मत्त इव चिन्ताकुलस्तिष्ठति)

वामनः—(स्वगतं) कष्टं ह्यनुभूतवैभवस्य निश्श्रीकत्वम्—

रम्भाद्यप्सरसां कटाक्षशबलीभूतो दिगीशेडितो
यो गन्धर्वमनोज्ञगानविवशश्रोत्रो विभूषोज्ज्वलः ।
उच्चैरावणवाहनस्सुरनुतो मन्दारमालाञ्चितः
स्वर्गे पर्यटति स्म तस्य विपिने ह्येकाकिनो हा गतिः ॥
॥ ८ ॥

इन्द्रः—भो दण्डधर, किमिति मत्प्राणान्नापहरसि ? किमु त्वमपि प्रतीपो मे ? (श्रवणमभिनीय) किमभिहितं, न प्रभवामि तावदमृताशिनस्ते प्राणानपहर्तुमिति । (सोन्मादहासम्) अमृतं नाम किं तदमृतम् ? (सभ्रूभङ्गमाकाशे लक्ष्यं बद्ध्वा) अस्ति वा जगत्यमृतमिति ? आम् अस्त्यमृतम् । (सहासबाष्पं)—

नारायणः करुणया मदनुग्रहाय
क्षीराम्बुधिं गिरिवरेण चिरं प्रमथ्य ।

तत्रोदपादयदमन्दवलावहं तत्
यत्पानतो यमभयं जनिमान्जहाति ॥ ९ ॥

हन्त, तादृशामृताशिनोऽपि मे किमेतादृशी दुरवस्था ? (दीर्घमुष्णं च निश्श्वस्य) दुरवगाहं नाम विधिविलसितम् ! (इत्यटवीपर्यटन-खेदमभिनयन्प्रस्तरतले समुपविशति ।)

वामनः—(स्वगतं) समुत्पाद्य मायया मयि वटुत्वसाधारणज्ञानमस्या-वगच्छामि तावदाशयम् । (इति तथा कृत्वोपसर्पति)

इन्द्रः—(सावेगं स्वगतं) कोऽयम् ? महान्प्रमादः यदि मामिन्द्रं प्रत्य-भिजानीयात् । (इति ससम्भ्रममुत्थाय वृक्षान्तर्हितो भवति)

वामनः—(सान्तर्हासं, स्वगतं) श्लाघनीया मानातिरेकस्य चेष्टा । (प्रकाशं) कस्त्वं तपोधन ?

इन्द्रः—वटो विदितोऽस्मि सोऽहं सम्बोधनेन ननु ?

वामनः—किं तव नामधेयम् ?

इन्द्रः—(उपसृत्य सनिर्वेदं) तद्ज्ञानतः किमिह ते ?

वामनः—मुखपङ्कजं ते भ्रंशं श्रियः पिशुनयत्यभिधत्स्व कस्त्वम् ? ॥१०॥

इन्द्रः—(स्वगतं) पटुरयं वटुः, मन्मुखावलोकनमात्रेण विदितवृत्तान्त इव ज्ञायते । (प्रकाशं) अप्यास्ति ते परिश्रमः पुरुषलक्षणपरीक्षा-याम् ?

वामनः—अथकिम् । शृणु तावत्—

यत्ते नैसर्गिकं तेजस्तत्त्वय्यस्ति तपस्विनि ।
पङ्काक्तमपि सद्दलं स्वकान्ति न जहाति हि ॥ ११ ॥

इन्द्रः—(सवैलक्ष्यं) ह्रस्वाकृतेरपि ते दीर्घा दृष्टिः ।

वामनः—किमाकारेण ? न श्रुतं किमु मूर्तिर्ह्रस्वापि कीर्तिर्दीर्घेति ?

पुरुषस्याकृतिर्लोके नैव कीर्तिप्रदायिनी ।
अशोकमञ्जरी रम्याप्यगन्धाऽऽद्रियते किमु ॥ १२ ॥

तदुपविशतु भवान् । पश्यामस्ते हस्तलक्षणम् । (उभावपि शिलातले समुपविशतः ; इन्द्रः दक्षिणहस्तं प्रसार्य दर्शयति)

वामनः—(अवलोक्य) किमिदम् ? दम्भोळिग्रहणव्रणकिणस्थपुटित इव दृश्यते ते हस्तः । अपि सत्यम् ?

इन्द्रः—(स्वगतं) हन्त, सुशिक्षित इव पुरुषलक्षणपरीक्षायाम् । (प्रकाशं) का कथा तापसस्य मे कुलिशग्रहणप्रसङ्गे ?

वामनः—(पुनर्निर्वण्य) महदिदमाश्चर्यम्—

त्रैलोक्यावनदक्षतां पिशुनयत्यत्र स्थिता रेखिका

(पादतलमवलोक्य)

चक्राब्जध्वजपद्मचामरमुखा रेखा लसन्त्यत्र च ।

(मुखमवलोक्य)

नेत्रे श्रोत्रविसर्पिणी (उरस्थलमवलोक्य) भवदुरः
कल्पस्रजोऽपि क्षमं

तत्साक्षात्सुरनायको धृततपोवेषोऽसि सत्यं ब्रुवे ॥१३॥

इन्द्रः—(सलज्जं शिरोऽवनाम्य स्वगतं) अये, ज्ञातोऽस्म्यनेन । महदिदमाश्चर्यं लक्षणशास्त्रेण तावत्सर्वं प्रत्यक्षमिवाभाति । किं कथयेयमधुना ? इन्द्र एवास्मीत्यङ्गीकरोमि । (विचिन्त्य) भवतु । (प्रकाशं) अपि शक्नोषि कथयितुं पुनरपि कदा वा राज्यप्राप्तिरस्येति ?

वामनः—(समन्दस्मितं) अथकिम् । लक्षणमेव ते कथयति । (इति पुनरपि हस्तमवलोक्य) अचिरादेव भविष्यति ।

इन्द्रः—(सनिःश्वासं) बहुधा चिन्तितमपि न पश्यामि तावत्पुनरपि राज्यप्राप्तेर्निदानम् । तत्कथं कथयति भवान् अचिरादेव भविष्यतीति ?

वामनः—(विहस्य) प्रायो जगति स्वलाभे त्वरातिशयो व्याकुल-यत्येवं जनं । निरीक्ष्यस्समयः—

प्राप्तेऽभ्युदयकाले तु तृणं यात्यस्त्रतां किल ।
दैवे तु प्रतिकूले स्याद्वज्रञ्चापि तृणोपमम् ॥ १४ ॥

तद्वामनेनापि वटुना मया कथमपि दाप्यते राज्यं यदि मह्य-मर्घप्रदित्सा ।

इन्द्रः—(स्वगतं) हन्त, वटुरयमुत्कोचग्राहीव । अथवा किमनेन दाप-यितुं शक्यते ?

दुर्दान्तदानववशं भुवनत्रयं यत्
दम्भोळिपाणिरपि सङ्कुचितात्मसारः ।
कर्तुं वशे न चतुरोऽभवमद्य खर्वो
मह्यं प्रदापयति तत्कथमेष वर्णी ॥ १५ ॥

वामनः—(सहासं) किं चिन्त्यते ! " सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः " ।

इन्द्रः—(सशीर्षान्दोलनं) तत्तु सत्यम् । किन्तु त्रैलोक्याधिपत्यहानिरिति हस्ताद्दानवाधमादाच्छिद्य कथमिव दाप्यते इति च । स्यादेतव, कस्त्वम् ? किन्निमित्तमटवीपर्यटनम् ?

(नेपथ्ये)

सर्वदर्शननिष्णातधिषणो धिषणोऽस्म्यहम् ।
अहो मे बुद्धिविभवस्तपस्वित्वाय कल्पते ॥ १६ ॥

इन्द्रः—(ससम्भ्रमं) किमिदम् ? सुरगुरुरपि निर्वेदनावेदयन्निस्सारता-मात्मबुद्धिविभवस्यापीत एवाभिवर्तते ।

वामनः—(सानन्दं नेपथ्याभिमुखमवलोक्य)—

दारिद्र्यप्रकटनदक्षवल्कलोऽयं
मार्तण्डप्रसृतखरातपातिखिन्नः ।

एकाकी विपिनतटेऽपि पर्यटन्सन्
तेजस्वी विधिवशतां स्वयं व्यनक्ति ॥ १७ ॥

इन्द्रः—(सानुतापं) साधूक्तं वटुना ।

(ततः प्रविशति बृहस्पतिः)

बृहस्पतिः—(दूरादेव वामनमवलोक्य सवैलक्ष्यभक्त्यतिशयं) अखण्डब्रह्माण्डावनधुरन्धरो भगवानजायमानो बहुधा विजायते । हन्त, स्वाश्रितरक्षणार्थं किं वा नानुष्ठितमनेन ? (उपसृत्य सबाष्पमञ्जलिं बद्ध्वा —

मीनकूर्मतनुभाक्पुरा हरे
स्वाश्रितान्सुरवरान्ररक्षिथ ।
अद्य वामनशरीरतः प्रभो
किं करिष्यसि निवेदयाञ्जसा ॥ १८ ॥

इन्द्रः—(स्वगतं) कथं सर्वेश्वरोऽयम् ? धिङ्मामन्यथाचिन्तितवन्तम् । (सवितर्कं) कुतो वा वामनता समाश्रिता ? भगवता, किमुमद्वामतापरिजिहीर्षया ?

वामनः—सुरगुरो, वामनोऽयमभिवादयते । (इति प्रणमति)

बृहस्पतिः—(ससम्भ्रमं बाहुभ्यामुत्थाप्य) सर्वजगद्वन्द्यो भवान् । तदलमनेन कर्मणा ।

वामनः—(सप्रश्रयं) अपि कुशलं बृहस्पते ?—

यस्य प्रसन्नधिषणाविभवेन कृत्स्नं
लोकत्रयं ह्यनतिलङ्घितसीम निघ्नम् ।
बृन्दारकाधिपतिरङ्गदानिर्विशेषं
लीलावशो भुजयुगेन बभार धर्मात् ॥ १९ ॥

बृहस्पतिः—नूनं बभार, न तु बिभर्ति । अत एव बृहस्पतिरपि वनस्पतिसहवासी संवृत्तोऽस्मि । भगवन्, अलं परिहासेन । विश्वशरीरी खलु भवान् । अहमपि विश्वान्तःपाती ।

इन्द्रः—(सलज्जं)—

भवन्मायावृतात्माहं नारायणमपि प्रभो ।
मर्त्यसाधारणं त्वान्तु ज्ञातवान्क्षम्यतामघम् ॥ २० ॥

(इति प्रणमति)

वामनः—(समन्दस्मितं) सुरेश्वर, किमिदं, नानुपश्यामि त्वय्यघम् ।

(इत्युत्थापयति)

इन्द्रः—(बृहस्पतिमुपसृत्य) भगवन्—

नैवान्तरं सद्गुरुमन्तरा तमो
निर्याति शिष्यस्य चिरेण सञ्चितम् ।
तत्त्वोपदेशेन विनैव सद्गुरोः
नोदेति साक्षात्कृतिरच्युतस्य च ॥ २१ ॥

(एतदुभयमप्युपनतं तत्रभवतो गुरोर्महिमातिशयेन)

वामनः—(समन्दस्मितं बृहस्पतिमवलोक्य) वाचस्पते, दिवस्पतिरभिहितोऽयम् । मया दाप्यते ते राज्यं, यदि मह्यमर्घप्रदित्सेति । अयन्तु विचिकित्सते ।

बृहस्पतिः—(सहासं) भगवन्, चिदाचिद्वर्गान्तःप्रवेशदक्षो भवान् किमेवमभिदधाति । भवदायत्तं हि जगत् । दत्तमनुभवति भवता शचीपतिरयम् । तदद्यापि दस्युपराधीनमस्मै दापयितव्यं भवतैव भुवनम् ।

वामनः—(सहासं) अत एव पाकशासनोऽयमनवरतमपि भवत्साचिव्यमभिलषति—

परिशील्यैव चातुर्यं नियुङ्क्ते मन्त्रिकर्मणि ।
बुधं यस्सतु भोगैकसक्तोऽपि स्यात्समृद्धिमान् ॥ २२ ॥

(इन्द्रमवलोक्य) साधु पुरन्दर, एतादृशगुरुसाचिव्यात्सुसुखमनुभवसि त्रैलोक्यम् ।

**इन्द्रः**—यदि पुनरपि भगवता दाप्येत ।

**वामनः**—(सवितर्कं) तत्तु सत्यं, कथं वा दापयामि ? स तु महात्मा वली वलिः । न कदापि धर्म्यात्पथः प्रच्युतः । कोऽपि जगति न कदापि मन्तुमन्तरा भवेद्धि दण्डभाजनम् । अत्र बृहस्पति-रेवाभिज्ञः ।

**बृहस्पतिः**—(सनिर्वेदं) अत्र तावदत्रत्यो वनस्पतिरेवाभिज्ञः ।

**वामनः**—कथमिव ?

**बृहस्पतिः**— देवदेव, नायमवसरः परिहासस्य—

सूत्रधारोऽसि लोकानां सर्वज्ञस्त्वं जगत्पते ।
जगद्रङ्गतटे जन्तून्सलीलं नर्तयस्यमून् ॥ २३ ॥

तद्यथा भवते रोचते । आश्रितरक्षणबद्धदीक्षो हि भवान् ।

**वामनः**—बृहस्पते, बलिस्तावत्—

धर्मैकसक्तहृदयः क्रतुकर्मनिष्ठः
मय्याहिताचलनिरन्तरभक्तिभारः ।
शुक्रोऽर्थतन्त्रनिपुणस्सचिवोऽस्ति तस्य
तच्चिन्तयामि कथमद्य लभेय राज्यम् ॥ २४ ॥

**बृहस्पतिः**—भगवन्—

विग्रहे दुर्ग्रहं दृप्तं बलिं जेतुं कथं भवेत् ।
तद्वञ्चनां विना नान्यमुपायमवलोकये ॥ २५ ॥

तद्भगवता भवता समाश्रयणीयाऽऽश्रितावनाय वञ्चना ।

**इन्द्रः**—(सप्रश्रयं) भगवन्, ममाप्ययमेवाशयः ।

**वामनः**—(स्वगतं) साधु, अस्मदाशयानुरोधि वचः । (चिन्तामभिनीय) (प्रकाशं) भवतु, बलिस्तावदिदानीं समारब्धाध्वरः तत्तत्सत्र-क्षेत्रमेव प्रविशामः ।

**इन्द्रः**—(सशङ्कं) यद्यावामपि तत्सत्रक्षेत्रमागच्छेव भवेव च बलिना प्रत्यभिज्ञातौ ।

वामनः—(सौदास्यं) सति च मे मायाबले, किमनया विचिकित्सया ?

बृहस्पतिः—यथाज्ञापयति देवः ।

वामनः—क्रतुक्षेत्रं विशन्दैत्यं वशीकृत्यात्ममायया ।
करिष्याम्यद्भुतं कर्म पश्यतं वश्यचेतसौ ॥ २६ ॥

(इति निष्क्रान्तास्सर्वे)

इति श्रीयदुशैलवासिवालधन्वि जग्गूवकुलभूषण
कविविरचित बलिविजयनाटके

प्रथमोऽङ्कः

———

## द्वितीयोऽङ्कः

(ततः प्रविशति नन्दनवने पुष्पापचयं नाटयन्ती मञ्जुघोषा)

मञ्जुघोषा—(दीर्घं निश्श्वस्य) अह्महे, विहिविळासिदं जं पुव्वदेव्वाणं परिजणेहिं वि अम्हेहिं होदव्वं संवुत्तं (इति चिन्ताकुला तिष्ठति)।

(छाया—अहो विधिविलसितं, यत्पूर्वदेवानां परिजनैरप्यस्माभिर्भवितव्यं संवृत्तम्।)

तिलोत्तमा—(ससम्भ्रमं प्रविश्य) हळा मञ्जुघोसे, भग्गवो तुवरावीअदि भूळोए सहामण्डणकिदे तुरिअं मन्दारपुप्फगुम्भणं कादव्वं त्ति। तुमं दाव एत्थ अकिदकज्जा चिट्ठसि (इत्युपसर्पति)।

(छाया—हळा मञ्जुघोषे, भार्गवस्त्वरयति, भूलोके सभामण्डनकृते त्वरितं मन्दारपुष्पगुम्भनं कर्तव्यमिति। त्वं तावदत्राकृतकार्या तिष्ठसि)।

मञ्जुघोषा—(सचिन्तं) हळा किं करेमि ण? प्पसरेइ एव्व हत्थो अप्पणो कज्जं णिव्वट्टिदुं त्ति, अह्माणं दसा ईरिसी संवुत्ता त्ति।

(छाया—हळा किं करोमि? न प्रसरत्येव हस्त आत्मनः कार्यं निर्वर्तितुमपि, अस्माकं दशेदृशी संवृत्तेति)

वनपालः—(ससम्भ्रमं वृक्षान्तरात्प्रविश्य) (हस्तसंज्ञयैवानयोर्वाग्व्यापारं निवार्य)—

स्नात्वा शुनासीरसरोवरे कवि-
र्यातीह दैत्याधिपसौधमेककः।
तस्माच्छनैस्सल्लपतं सुरेष्वयं
सर्वाङ्गचक्षुर्हि कुशाग्रधीस्स्वयम् ॥ १ ॥

तिलोत्तमा—(सोद्वेगं) जइ एव्वं ता तुरिअं एव्व णिव्वट्टिअपसुव-इवरिवस्सो गमिस्सइ भूळोअं तं अह्मेहिं वि ळहु गन्दव्वं जण्णक्खेत्तं । (इति ससम्भ्रमं पुष्पापचयं नाटयति)

(छाया—यद्येवं तर्हि त्वरितं निर्वार्तितपशुपतिवरिवस्यो गमिष्यति भूलोकं तदस्माभिरपि लघु गन्तव्यं यज्ञक्षेत्रम् ।)

वनपालः—यद्येवं इदं तावद्दीयते, प्रापयतु भवती दैत्यराजं (इति निष्क्रम्य पुनः प्रविश्य दुकूलावगुण्ठितं रत्नभाजनं तिलोत्तमा-हस्ते निक्षिपति)

तिलोत्तमा—(अवगुण्ठनमुद्धाट्य सवैलक्ष्यं मञ्जुघोषायै दर्शयन्ती संस्कृतमाश्रित्य) भोः पृषदश्व महदिदमाश्चर्यं यदनवरतमपि वैजयन्ते पर्यटन्तीनामपि नास्माकं दृष्टिपथमारूढो ह्येतादृशो वस्तुविशेषः । कथं वा सम्पादितो भवता ?

वनपालः—दानवाधीशाज्ञया सम्पादितोऽयं, न तु मया ।

तिलोत्तमा—कथमिव ?

वनपालः—बलिना तावदाज्ञप्ताः पारिजातादयस्सुरतरवः, पाकशासनेनाप्यननुभूतपूर्वो वस्त्रभूषणविशेषोऽवभृथानन्तरं धार्यो भवद्भिः प्रेषणीयः इति ।

तिलोत्तमा—युज्यते, (इति पुनरप्यवगुण्ठ्य) न ते यज्ञदिदृक्षा ?

वनपालः—(सनिश्श्वासं) अस्ति, किं करोमि ? कर्तव्या खलु राजाज्ञा तावदशून्या—

क्रूरदण्डो हि दैत्येशस्स्वायत्तेषु सुपर्वसु ।
तत्सर्वैस्सर्वथा भाव्यमप्रमत्तैस्सुरैरिह ॥ २ ॥

मञ्जुघोषा—साहु भणिदं इमिणा ।

(छाया—साधु भणितमनेन ।)

वनपालः—तद्युवामपि राजनियोगमशून्यं कुरुताम् ।

उभे—तह्ा ।

छाया—(तथा)

(इति निष्क्रान्तास्सर्वे)

मिश्रविष्कम्भः

(ततः प्रविशति बृहस्पतीन्द्राभ्यां सह वामनः)

वामनः—(नेपथ्याभिमुखमवलोक्य) बृहस्पते, पश्यतु भवान् क्रियान्सम्भ्रमः पूर्वदेवानां—

तत इतो गमनागमनोत्सुकाः
कतिपये निजकार्यधुरन्धराः ।
ततमहानसधूमकरम्भिते
मखभुवो विचरन्त्यजिरेऽसुराः ॥ ३ ॥

बृहस्पतिः—(विलोक्य) हन्त, अप्सरसोऽपि भुजिष्या इव कर्मरताः । तथाहि—

काचिच्चन्दनपेषणैकनिरता काचित्स्रजां बन्धने
सक्ता काचिदनल्पकल्पितमहाकल्पा जलासेचने ।
काचित्फूत्कृतिवर्धितागरुमहाधूपाऽपराऽभ्यागत-
स्फीताराधनवस्तुसङ्ग्रहपरा दैत्येश्वरस्याज्ञया ॥ ४ ॥

इन्द्रः—(स्वगतं) कष्टं भोः कष्टं, यदस्मदसाधारणतया नियमितास्तावदप्सरसोऽत्र भुजिष्यास्संवृत्ताः ।

(नेपथ्ये वादित्रनादः)

वामनः—(नेपथ्याभिमुखमवलोक्य) किमिदं, अवसित इव सप्ततन्तुः । यन्निर्वर्तितावभृथो दिव्यालङ्कारालङ्कृतो महात्मा दानवसार्वभौमः प्रतिनिवर्तते । (निर्वर्ण्य) पुरन्दर, भवदीया अपि तदायत्तास्तत्कर्मणि व्यग्रा इव । पश्यतु भवान् (इत्यङ्गुल्या निर्दिशन्)

अस्तम्भतोरणमयं गगने समीरः
पुष्पैस्तनोति वरुणो धुतचामरोऽत्र ।
छत्रोच्चदण्डमपि दण्डधरो बिभर्ति
यात्रोत्सवेऽस्य शितिकण्ठसखोऽनुयायी ॥ ५ ॥

इन्द्रः—भगवन्, एतदखिलमप्यवलोकयतः प्रहृष्यमिव मे हृदयं—

निरुपमसुकृतः कृतव्रतौघो
धरणितले विजितेन्द्रियो महात्मा ।
अनुभवति यदन्तरायशून्यं
तदिह सुखं भजति प्रभुर्बलिर्हि ॥ ६ ॥

वामनः—शतमन्यो, सुकृतमन्तरा न कोऽपि जन्तुरनुभवति फलमीदृशम् ।

बृहस्पतिः—(नेपथ्याभिमुखमवलोक्य) भगवन्, प्रविशति बलिस्सपरिवारस्सभाभ्यन्तरम् । तद्वयमप्युपसर्पामः ।

(सर्वे परिक्रम्य सभ्यानुपसर्पन्ति)

(ततः प्रविशति रत्नमयसिंहासनोपविष्टस्सभास्तारस्तूयमानो बलिः)

बलिः—(सभास्तारान्हस्तसंज्ञयैवोपवेश्य)—

सभ्या युष्मत्सहकृतिवशात्सप्ततन्तुं महान्तं
निष्प्रत्यूहं व्यरचयमहं प्राप्तशक्राधिपत्यः ।
युष्मत्प्रीतिर्मम च महते श्रेयसे कारणं स्यात्
प्रायो राज्यस्थितिरुभयगप्रीतिबन्धा हि लोके ॥ ७ ॥

वामनः—(जनान्तिकं) दिवस्पते, अपि श्रुतं ? लब्धराज्यस्थिरीकरणाय वरीवर्ति बलिरयं प्रजानुरागतत्परः ।

इन्द्रः—(जनान्तिकं) अथकिम् ?

सभ्याः—(साञ्जलिबन्धं) देवदेव, दुर्दान्तवृन्दारकवृन्दावमर्दनधुरन्धर, दानवाधीश्वर, सर्वमपि भवत्प्रभवातिशयेन स्वयमेव प्रचलति। के वयमत्र भवत्पादारविन्दवन्दनैकतानाः?

इन्द्रः—(स्वगतं) हन्त, प्रकृतयोऽप्यत्रानुरक्ताः।

(प्रविश्य)

पुरुषः—(साञ्जलिबन्धं) देवदेव, आवेदयति भार्गवः, "प्रचलतु नाम यथेप्सितं प्रकृत्यभ्यर्हणं, आगतोऽस्म्यनुपदमेव" इति।

बलिः—तथा। (प्रकृत्यभिमुखभूय) भोस्समलङ्कृतसभास्थानाः प्रजाः, नाहं स्वाभिमतं दातुकामः। किन्तु भवदभिलषितमर्थं दित्सुरस्मि। तत्सत्वरमावेदयन्तु स्वाभिमतम्।

वामनः—(स्वगतं) अयमेव समयस्स्वाभिमतसम्पादनाय, यदुशना न सन्निहितः। (उत्थाय प्रकाशं) अहमर्थी।

(सर्वे सविस्मयं निर्निमेषलोचना वामनं पश्यन्ति)

बलिः—(सविस्मयं स्वगतं) अये—

कुटिलकुन्तलकान्ततरालिको<br>
हृदयहारिविशालविलोचनः।<br>
श्रवणमूलविलम्बितकुण्डलः<br>
तपनकान्तिरहो प्रथमाश्रमी॥ ८॥

(साञ्जलिबन्धमासनादुत्थाय प्रकाशम्)

दिव्यरूपोऽसि खर्वोऽपि सर्वचित्तापहारक।<br>
कस्त्वं किं वेप्सितं तेऽद्य लीनं मे हृदयं त्वयि॥ ९॥

अप्सरसः—(सवैलक्ष्यं परस्परं जनान्तिकं) अह्महे, को एसो? खव्वो वि रूवेण अह्माणं ओहरइ लोअणं हिअअं अ।

(छाया—अहो, क एषः? खर्वोऽपि रूपेणास्माकमपहरति लोचनं हृदयं च।)

कश्चन दानववृद्धः—(उत्थाय) देव, पुरन्दरारे, दानवमानमानन, सिंहासनोपविष्टं देवमयं दासजनो विज्ञापयितुं कामयते।

बलिः—(सिंहासने समुपविश्य) निवेदयतु भवान्।

वृद्धः—यद्यपि नूनमयं वामनो मनोहररूपो माननीय एव तथापि मे काचन विचिकित्सा, सहस्राक्षपक्ष्येणानेन भवितव्यमिति—

मायावी सुरपतिसाह्यकृन्मुरारिः
दैत्येन्द्रानजयदचिन्त्यचित्ररूपः।
तद्धीधैं मनसि विचार्य सम्यगस्मिन्
यद्देयं वितरतु तद्भवानमुष्मै॥ १०॥

बलिः—(ससान्त्ववचनं) रूपमेवास्यैतन्महिमानं व्याचष्टे। तदलं विचिकित्सया।

अमात्येष्वन्यतमः—(ससम्भ्रममुत्थाय) न विस्रम्भकारणं हि रूपम्। तदवधारयतु देवः—

कमलारमणः पुरा सरोषं
निजमायाधृतनारसिंहरूपः।
प्रपितामहमुद्भटप्रतापं
तव हन्ति स्म हि विश्वसार्वभौमम्॥ ११॥

विचित्ररूपो हि पुरुहूतपक्ष्यो निसर्गतो दैत्यद्वेषी किं वा नाचरेत्? तदलं रूपश्लाघनया। गुणः परं परिशील्य ग्राह्यः।

वामनः—

अधीताम्नायोऽहं गुरुवरसपर्यैकनिरतः
षडङ्गाध्यायी च श्रुतिशिरसि निष्णातधिषणः।
निजाचारासक्तो दितिजनृपते ब्रह्मणिचरः
किमन्याद्विशेषं कथयितुमहं सज्ज इह ते॥ १२॥

बलिः—(अमात्यमवलोक्य) यद्यपि साचिव्यानुगुणमभिहितममात्येन तथापि—

यत्राचारो लसति बहुशस्तस्य शास्त्रे न घोस्स्यात्
शास्त्राभिज्ञो य इह स निजाचारनिष्ठो न गर्वात् ।
अस्मिन्नेतद्द्वितयमपि तद्वर्तते दीप्रमूर्तौ
किं तर्केण प्रभुरहममुं तर्पयाम्यर्थदानैः ॥ १३ ॥

अमात्यः—देव, राज्यतन्त्रे दत्तदृष्टिना मया तावदेवमावेदितम् । अत्र सन्ति च बहवो वृद्धाः । ते तु कथं मन्यन्ते ?

केचन दानववृद्धाः—(उत्थाय) साधूक्तममात्येन । न हि तद्वचनमेव विस्रम्भभाजनम् । जगति भवन्ति बहवस्स्वार्थैकनिष्ठा ब्रेता-द्दशास्समारोपितात्मगुणविकत्थनपराः ।

वामनः—दानवसार्वभौम—

आत्मश्लाघा परं सद्भिर्गर्हिता निर्निमित्तिका ।
प्रसङ्गात्कथितास्सत्यं गुणा मे न तु दम्भतः ॥ १४ ॥

बलिः—ब्रह्मचारिन्, साध्ववगतो भवदाशयः—

केषुचिद्गुणिनं त्वान्तु निर्गुणं निगदत्सु च ।
सद्गुणानां प्रकाशोऽत्र कर्तव्योऽवश्यमात्मना ॥ १५ ॥

तदत्र तावद्भवतो न कोऽपि दोषः । (वृद्धानवलोक्य) भोः प्रतीक्ष्याः, न कदापि बलिर्भग्नप्रतिज्ञो हि । तदधुना यथाप्रतिज्ञं कर्तुकामोऽस्मि । किमनया विचिकित्सया ?

इन्द्रबृहस्पती—(परस्परं जनान्तिकं) अहो, दानवस्यापि बलेर्धर्मे स्थिरप्रतिज्ञता । अथवा विचित्रा खलु भगवतो माया ।

अमात्यः—(स्वगतं) हन्त, अस्मत्सार्वभौमोऽयं पूरयतीव मनोरथमस्य । किं करोमि ? (प्रकाशं) देव, पूरयतु नाम मनोरथमस्य, अयन्तु कमर्थमर्थयते, इति तु ज्ञातव्यम् ।

वामनः—

न मे राज्ये कोशे गजरथपदात्यश्वकलिते
बले काङ्क्षा किन्तु प्रतिदिनमनल्पव्रतजुषे ।
विविक्तं मत्पादत्रितयपरिमेयं क्षितितलं
प्रदेह्येतन्मह्यं दितितनुज ते यद्यभिमतम् ॥ १६ ॥

बलिः—(सभ्यानवलोक्य) अपि श्रुतं भवद्भिरेतदभ्यार्थितम् ?

सभ्याः—(सौदास्यम्) किमियदेव ? प्रदातुमर्हति देवः ।

बलिः—(सहर्षं) ब्रह्मचारिन्, यत्रापेक्षितं तत्र दत्तम् ।

वामनः—दैत्याधीश्वर, न तथा, किन्तूदकधारानिपातेन प्रदातव्यं मत्पादत्रयपरिमितं स्थलम् ।

बलिः—महान्प्रमोदः, तथास्तु, कः कोऽत्र भोः ? भृङ्गारः, भृङ्गारः, (शुक्रशिष्यस्सविनयमानीयार्पयति) ।

वामनः—(बलिमुपसृत्य दक्षिणपाणिं प्रसार्य तिष्ठति) ।

बलिः—(आसनादुत्थाय भृङ्गारमावर्जयितुमुद्युङ्क्ते) ।

(ससम्भ्रमं पटाक्षेपेण प्रविश्य)

भार्गवः—सार्वभौम, कोऽयमुद्यमः, मा पातय दानधाराम् ।

बलिः—(सोद्वेगं) किमर्थम् ?

भार्गवः—अनरालप्रकृते, न जानाति भवान्मायाविनमेनम्—

हरिणाजिनोत्तरीयो
माणवकोऽयन्तु वामनाकारः ।
तालातपत्रसुभगो
भगवान्भवतः प्रलोभने निरतः ॥ १७ ॥

बलिः—(सविस्मयं) कथं, साक्षाद्भगवानयं; (साञ्जलिबन्धम्) धन्योऽस्मि ।

पुरुषोत्तमेन भवता श्रियःपते
बत वामनत्वमवलम्बितं कुतः ।
त्वदधीनमेतदखिलं किलाथवा
जनमर्थिता वितनुते हि वामनम् ॥ १८ ॥

(सभक्त्युन्मेषवाष्पम्)

वेदान्तवेद्यमनवद्यगुणौघपूर्णं
सङ्कल्पमात्रपरिकल्पितसर्वलोकम् ।
ब्रह्माद्यगोचरमनेन मुकुन्दमक्ष्णा
प्रेक्षे यदत्र तदहं सुकृती कृतार्थः ॥ १९ ॥

भार्गवः—चक्रवर्तिन्, लब्धस्वार्थोऽयं भवन्तमधः पातयति । तदलमनेन कर्मणा ।

बलिः—(सवाष्पं) आचार्यवर्य, शान्तं पापं, शान्तं पापं, कथं मामयमधः पातयति ? न कदाप्येवं पतितोद्धारको हि भगवानयम्—

लक्ष्मीपतेर्नारकितारकस्य
ध्यानात्पवित्रः पतितोऽपि हि स्यात् ।
साक्षान्मुकुन्दाय कृतप्रणामः
कथं भवेयं पतितोऽहमत्र ॥ २० ॥

(इति दातुमिच्छति)

भार्गवः—(बलिहस्तमवलम्ब्य) दानवसार्वभौम, किमु न जानासि निसर्गत एवायं दैत्यद्वेषीति ?

बलिः—आचार्य, भवानपि जानात्येव भक्तवत्सलोयमिति ।

भार्गवः—दैत्येश्वर, भक्तमपि दानवं वञ्चयत्ययम्, तन्मा पातय दानधारां याञ्चानर्होऽयम् ।

**बलिः**—(सविनयं) दैत्यगुरो यदि वञ्चयेत् तथाप्यनुगृहीतः कृतार्थो भवेयम् । किञ्च, साधूक्तमाचार्येण, याच्ञानर्होऽयमिति । चतुर्वर्ग-फलप्रदोऽयं कथमर्थी भवितुमर्हति ? मद्भाग्यवशादेव भगवानर्थी सन्नायातः । तदलं तर्कवितर्कविमर्देन । कृतप्रतिज्ञोऽहं ददाम्येव पादत्रयपरिमितं स्थलम् । (इति भृङ्गारमावर्जयितुमुद्युङ्क्ते)

**भार्गवः**—(स्वगतं) हन्त, कृतप्रतिज्ञोऽयं धर्मात्मा न निवर्तते समुद्दिष्टात्कर्मणः । किं करोमि ? (विचिन्त्य) भवतु । (इत्यन्तर्दधाति)

**बलिः**—(स्वगतं) हन्त, कुपित इवाचार्यः । भवतु नाम । निष्प्रत्यूह-मधुना प्रवर्तयामि दानकर्म । (प्रकाशं) भगवन्, पूर्णकामाय तुभ्यं ददामि स्थलम्, अङ्गीकुरु दानधाराम् । (इति भृङ्गारमावर्जयति)

**वामनः**—(सस्मितं) दानवेश्वर, किमिदं ? नैव पतति दानजलम्, किं मां प्रलोभयसि ?

**बलिः**—(सावेगं) भगवन्—

किमिदं महदाश्चर्यमाचार्योक्त्यतिलङ्घनात् ।
स्यादेवं विपदां मूलं गुरूल्लङ्घनमेव हि ॥ २१ ॥

**वामनः**—(सशीर्षान्दोलनं) भवतु, बले, मा चिन्तय । परिहराम्यन्त-रायम्, (इति भृङ्गारनालिकाभ्यन्तरं निजदर्भपवित्राग्रं प्रवेशयति)

**भार्गवः**—(मायां विहाय प्रत्यक्षीभूय दक्षिणनयनं परिमृजन् ) दानव-सार्वभौम—

वितर प्रथमं यदिष्टमस्मै
निगमान्तप्रथितप्रभाव एषः ।
सुकृतप्रतिबन्धकस्य यत्स्यात्
अनुभूतं फलमद्य तन्मयेह ॥ २२ ॥

भगवन्, क्षन्तव्यमागः । (इति वामनं प्रणमति)

वामनः—(समन्दहासं) दानवाचार्य, किमु भवतापराद्धम्? नानुपश्यामि भवन्तमपराधिनम्, उत्तिष्ठ।

(भार्गवः—उत्थाय मन्त्रपूर्वकं स्वयमेव दापयति दानधाराम्)

(गगनात्पुष्पवृष्टिः पतति)

(अनुपदमेवा ताकारः प्रवृद्धो वामन ऊर्ध्वलोकमानमेकेन पादेन अन्येन च भूलोकमानमभिनयति)

(सर्वे सविस्मयं पश्यन्ति)

बलिः—(सविस्मयमूर्ध्वमवलोक्य साञ्जलिबन्धम्)—

ज्योतिर्मण्डलमध्यवर्तिजलमुक्सङ्काशकायो महान्
नक्षत्रग्रहतारकाद्युतिहरस्फीतप्रकाशोज्ज्वलः।
ऊर्ध्वोत्क्षिप्तबलारिरत्नविजयस्तम्भायमानैकक-
स्थूलोरुः क्षितिविस्तृतान्यचरणो मां पातु नारायणः ॥२३॥

भार्गवः—भगवन्—

एकेन चक्षुषाऽहं
काणोऽप्यधुना भवामि किल धन्यः।
यत्पश्यामि महान्तं
त्रिविक्रमं त्वां क्रमात्तभुवनान्तम् ॥ २४ ॥

(इत्यञ्जलिं बध्नाति)

त्रिविक्रमः—बले मत्पादद्वयपरिमितस्तावदुपात्तः प्रदेशः। क्व पुनरवशिष्टः?

बलिः—(साञ्जलिबन्धं)—

भक्तानां यो हृदयकमले कोमले नित्यवासः
स्वाङ्के लक्ष्म्या मृदुलमृदुलैः पाणिभिर्लालितो यः।
तेन श्रीमन्कुरु मुकुटिनं पादपद्मेन मां द्राक्
कोटीरेण प्रकृतिविकृतेनास्मि नाहं किरीटी ॥ २५ ॥

त्रिविक्रमः—दानवेश्वर, यद्यपि मद्भक्त एव भवान् तथापीदमवधारय—

मन्नियोगात्सहस्राक्षस्त्रैलोक्यप्रभुतां गतः।
तद्विरुद्धं त्वयारब्धं पातालं त्वां नयामि तत्॥ २६॥

बलिः—यथा रोचते भगवते। (साञ्जलिबन्धं) इदमेकमभ्यर्थयते भवदङ्घ्रितामरसैकसेवाहेवाकोऽयं—

दिवि भुवि पाताले वा
ममास्तु वासो मुकुन्द तव कृपया।
दिव्यं दर्शय रूपं
सततं पश्यन्कृतार्थतां यामि॥ २७॥

(क्षितितलनिहितजानुयुगलो मस्तकमवनम्य)—

निरुपमसौन्दर्यनिधे
निधेहि मयि तेऽङ्घ्रिदास्यसौभाग्यम्।
चिरमिह लोके धन्यो
भवेयमानन्दसिन्धुमग्नात्मा॥ २८॥

त्रिविक्रमः—तथास्तु। (इति चरणेन बलिमस्तकमवष्टभ्य बलिं भूविवरं नयति) (सर्वे सभक्त्युन्मेषं पश्यन्ति)

(गगनात्पुष्पवृष्टिः पतति) (तत्क्षणमेव करगृहीतमन्दारमाला नाकलक्ष्मीर्गगनादवतरति)

लक्ष्मीः—(इन्द्रमुपसृत्य)—

बलौ बलिनि सक्ताहमद्यदैत्यार्यनुज्ञया।
श्रये त्वां विबुधाधीश लतेवोपघ्नशाखिनम्॥ २९॥

(इति पुरन्दरकन्धरायां मन्दारमालामर्पयति)

दिक्पालाः—(बाहुमुद्यम्य) विजयतां देवदेवः।

इन्द्रः—(स्वप्रकृतिमवाप्य त्रिविक्रमं प्रणमति)

त्रिविक्रमः—(इन्द्रमुत्थाप्य) पुलोमजाजाने, किं ते भूयः प्रियमुपहरामि ?

इन्द्रः—(सविनयं)—

जितश्शत्रुस्त्वया देव दत्तं मे भुवनत्रयम्।
नाकलक्ष्म्या वृतश्चाहं किमितोप्यस्ति मे प्रियम्॥ ३०॥

तथापीदमस्तु। (भरतवाक्यम्)—

भूपालाः परिपालयन्तु भुवनं न्याय्येन सम्यक्पथा
स्याद्गोब्राह्मणमण्डलाय कुशलं लोकोऽस्तु नित्यं सुखी।
कासारा रसपूरिता विटपिनः पुष्पैः फलैस्सम्भृताः
सस्याढ्या धरणिश्च सन्तु समये वर्षन्तु धाराधराः॥ ३१॥

(निष्क्रान्तास्सर्वे)

इति श्रीयदुशैलवासि बालधन्वि जगद्गुरुकुल
भूषणकविविरचिते बालिविजये
द्वितीयोऽङ्कः।

---